विराधं तपसां विघ्नं जघान विजितो यदि ।
परो धनुर्भृतां रामः स कथं न विवक्षितः ॥ १३२ ॥
प्रणश्यन्नपि नाशक्नोदत्येतुं बाणगोचरम् ।
त्वयैवोक्तं महामायो मारीचो रामहस्तिनः ॥ १३४ ॥

---

मनोरीप्सितं नेष्टं विरोधमप्येवं पुरुषवानरैः सह नैषीः न इच्छ मायोगि टी ॥ १३२ ॥ भ०

विरेत्यादि । तपसां विघ्नं विराधं विहन्यतेऽस्मिन्निति घञर्थे कविधानमिति कः तादृक् छलेनापि हन्तुं न दोषायेति दर्शयति धनुर्भृतां वरः श्रेष्ठः सन् विजितोऽभिभूतोऽपि रामो यदि जघान स कथं न विवक्षितः यतो राममप्यसौ जितवान् ॥ १३३ ॥ ज० म०

एको द्वाभ्यामिति यदुक्तं तदुत्तरमाह विराधमित्यादि । धनुर्धराणां श्रेष्ठोऽपि रामः आदौ विजितोऽभिभूतोऽपि सन् पश्चात्तपसां विघ्नमन्तरायं विराधं यदि जघान तदा कथं स विराधो न विवक्षितः न प्रसिद्धः अपि तु विवक्षित एव स राम इत्यन्ये विहन्यतेऽस्मिन्निति विघ्नः अभिधानादाधारे टक् ॥ १३३ ॥ भ०

प्रणेत्यादि । मारीचः प्रणश्यन्नपि पलायनपरोऽपि सन् महामायः कनकमृगरूपधारित्वात् रामहस्तिनः रामो हस्तीव तस्य बाणगोचरं बाणपदवीं अतिक्रमितुम् अत्येतुं नाशक्नोत् न शक्तवानिति त्वयैवोक्तं ममारेत्यभिदधता न मया यदि शक्नोति अतिक्रमितुं न ममार ॥ १३४ ॥ ज० म०

मन्नियोगाच्च मारीच इत्यादि यदुक्तं तदुत्तरमाह प्रणश्यन्निति । महती माया यस्य स मारीचः प्रणश्यन्नपि पलायमानोऽपि रामहस्तिनो बाणगोचरं बाणपदवीम् अत्येतुम् अति-

अन्यासक्तस्य यद्वीर्य्यं न त्वं स्मरसि बालिनः।
मूर्च्छावान् नमतः सन्ध्यां ध्रुवं तद्बाहुपीड़ितः॥ १२५॥
असद्बन्धुवधोपज्ञं विमुञ्च बलिविग्रहम्।
सीतामर्पय नन्तव्ये कोषदण्डात्मभूतिभिः॥ १२६॥

---

क्रमितुं न अशक्नोत् न शक्तोऽभूत् इति तु त्वयैवोक्तं रामो हस्तीव बलवत्त्वात् एतेन रामस्य धन्विश्रेष्ठत्वमस्त्येवेति सूचितम्॥ १२४॥ भ०

अन्येत्यादि सन्ध्यादेवतां नमतो अन्यासक्तस्य बालिनो यद्वीर्य्यं सामर्थ्यं तत् ध्रुवमवश्यं त्वं न स्मरसि न चेतयसि कुतः बाहुपीड़ितः सन् मूर्च्छावान् जातः अतएव न स्मरसि येनैवमुक्तवानसि॥ १२५॥ ज० म०

निजघानान्यसंसक्तमित्यादि यदुक्तं तदुत्तरमाह अन्येत्यादि। अन्यासक्तस्य बालिनः यद्वीर्य्यं तत्त्वं ध्रुवं न स्मरसि कीदृशस्त्वं सन्ध्यां नमतो वन्दमानस्य तस्य बाहुपीड़ितः सन् मूर्च्छावान् एतेन बालिबधेऽपि महत्त्वमस्तीति सूचितम्॥ १२५॥ भ०

निजघानान्यसंसक्तमिति उपसंहरन्नाह असदित्यादि। यतो बलवद्भ्योऽपि बलीयान् रामः तस्माद्बलिना रामेण सह विग्रहं मुञ्च त्यज। कीदृशं बन्धुबधोपज्ञं प्रथमतो ज्ञातिविनाशेन विदितमित्यर्थः उपज्ञायते इत्युपज्ञा इगुपधेति कः बन्धुबधस्योपज्ञेति सः उपज्ञोपक्रममिति नपुंसकलिङ्गता तत् सामानाधिकरण्यादसदिति नपुंसकलिङ्गता नन्तव्ये प्रणामार्हे कोषदण्डात्मभूतिभिः सह सीतामर्पय॥ १२६॥ ज० म०

असदित्यादि। तस्मात् बलिना रामेण सह विग्रहं विरोधं विमुञ्च त्यज। कीदृशम् असतां बन्धूनां बधस्य उपज्ञं

स्फुटपरुषमसह्यमित्थमुच्चैः
सदसि मरुत्तनयेन भाष्यमाणः ।
परिजनमभितो विलोक्य दाहं
दशवदनः प्रदिदेश वानरस्य ॥ १३७ ॥

इति प्रकीर्णकाः ।

इति भट्टिकाव्येऽशोकवनप्रभञ्जनं नाम
नवमः सर्गः ।

---

प्रथमतो ज्ञातिबधेनावेदितमित्यर्थः उपज्ञायते यत इत्युपज्ञ आत इति ङः परमते उपज्ञोपक्रमयोरादिकथने क्लीवत्वं तन्मते असतां बन्धूनां बधस्य उपज्ञा प्रथमतो ज्ञानं यस्मादिति बहुव्रीहिः एतेन रावणस्य बन्धुबधो न भविष्यतीति यत् ज्ञानमासीत् बलिविग्रहेण तदभाव इति सूचितं तस्मात् नन्तव्ये प्रणम्ये रामे कोषादिभिः सीतां समर्पय ॥ १३६ ॥

स्फुटेत्यादि । इत्थं स्फुटपरुषम् उक्तप्रकारेण स्फुटं स्पष्टं परुषं रूक्षं अतएवासह्यं सोढुमशक्यम् उच्चैर्महता ध्वनिना सदसि सभायां मरुत्तनयेन भाष्यमाणोऽभिहितः इत्थमित्यनेन वस्तुनः परिसमापितत्वात् तेन वर्त्तमानसामीप्य इति लट् परिजनमभितः उभयपार्श्वे स्थितान् भृत्यान् विलोक्य वानरस्य दाहं प्रदिदेश आदिष्टवान् ॥ १३७ ॥ ज० म०

इति भट्टिकाव्यटीकायां जयमङ्गलायामधिकारकाण्डे
चतुर्थः परिच्छेदः ।
काव्यस्य मारुतिसंयमो नाम नवमः सर्गः ।

स्फुटेत्यादि । इत्थमुक्तप्रकारेण स्फुटं स्पष्टं परुषं रूक्षं अतएवासह्यं उच्चैर्महता ध्वनिना सदसि सभायां मरुत्तनयेन

हनमता भाष्यमाण उक्तः सन् अभित उभयपार्श्वे परिजनं विलोक्य दशवदनो रावणो वानरस्य दाहं प्रदिदेश आदिष्ट-वान् ॥ १३७ ॥ म०

इति प्रकीर्णकाः ।

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभरत-सेनविरचितायां भट्टिटीकायां मुग्धबोधिन्यां नवमः सर्गः ।

समाप्तमधिकारकाण्डम् ।

---